

# संस्कृत भारती

अक्षरम्, ८ उपमार्गः, २ घट्टः गिरिनगरम्, बेङ्गलूरु - ५६० ०८५.

# पत्रालयद्वारा संस्कृतम्

संस्कृतम् संस्कृतम् संस्कृतम् संस्कृतम् संस्कृतम्

## SHIKSHA -9

Bk. Demian 2000

ॐ

॥ जयतु भारतम् - जयतु भारती ॥

# संस्कृत भारती

## पत्रालयद्वारा संस्कृतम्

***Samskrit Through Correspondence***

"Aksharam" 8th Cross, II Phase, Girinagar,
Bangalore-560 085. Ph.: 6721052

Serial No. [ ]

## शिक्षा

॥ अव्यवस्थितचित्तस्य प्रसादोऽपि भयङ्करः ॥

Even a favour conferred on you by a fickle minded person can be dangerous.

## नवमः पाठः

### १. कृदन्ताः - Mixed Examples

As in the previous lesson let us learn participles through a story. Recognise the participles in the following story and use them in sentences of your own.

१. नारदः नारायणं ध्यायन् वाल्मीकेः आश्रमम् आगतवान् ।
२. वाल्मीकिः आगच्छन्तं नारदं दृष्ट्वा उत्थितवान्[1] ।
३. तदा वाल्मीकिः नारदं नमन् स्वागतं कृतवान् ।
४. उपविशन्तं नारदं वाल्मीकिः प्रश्नं कृतवान् ।
५. 'अस्मिन् जगति सन्मार्गे तिष्ठन् को वा धर्मं रक्षति ?
६. तादृशं पुरुषम् उद्दिश्य काव्यं लेखितुम् आलोचयन्[2] अस्मि ।'
७. वाल्मीकेः प्रश्नं श्रुत्वा नारदः उक्तवान् ।

---

1. Stood up, 2. (I am) thinking

८. 'श्रीरामः एव सन्मार्गे गच्छन् धर्मं रक्षन् राज्यं पालयति ।
९. श्रीरामम् उद्दिश्य एव काव्यं लिखित्वा प्रचारं कुरु ।'
१०. इत्युक्त्वा संक्षेपेण श्रीरामस्य कथां श्रावयित्वा[3] नारदः वीणां वादयन्[4] गतवान् ।
११. वाल्मीकिः वनराजिं[5] पश्यन् स्नातुं तमसानदीं गतवान् ।
१२. सः तमसातीरे अटन् क्रौञ्चमिथुनं[6] दृष्टवान् ।
१३. कश्चन व्याधः[7] तत् दृष्ट्वा पुम्पक्षिणं[8] बाणेन मारितवान्[9] ।
१४. तदा क्रौञ्ची[10] म्रियमाणं[11] पतिं दृष्ट्वा बहुधा विलपितवती[12] ।
१५. इदं दृष्ट्वा खिद्यमानः[13] वाल्मीकिः श्लोकरूपेण शापं दत्तवान् ।
१६. वाल्मीकेः शिष्याः श्लोकं श्रुत्वा नन्दन्तः[14] पुनः पुनः पठितवन्तः ।
१७. वाल्मीकिः अपि नद्यां स्नात्वा पठतः शिष्यान् पुनः पुनः समीक्ष्य चिन्तयन् आश्रमम् आगतवान् ।
१८. तदा ब्रह्मा प्रादुर्भूय[15] नारदं प्रति उक्तवान् ।
१९. 'वाल्मीके ! ममानुग्रहादेव भवतः वदनात्[16] श्लोकः निर्गत्य बहिः आगतः ।
२०. इतः परं रामायणं लिखित्वा प्रसारं च कृत्वा लोकोपकारं कुरु ।'
२१. इत्यभिधाय[17] वाल्मीकिम् अनुगृह्य च ब्रह्मा अन्तर्भूतवान्[18] ।
२२. ततः वाल्मीकिः प्राङ्मुखः[19] उपविश्य रामवृत्तान्तमेव ध्यायन् रामायणं लेखितुम् आरब्धवान् ।
२३. विषयमनुसृत्य सप्तकाण्डैः विभज्य चतुर्विंशतिसहस्रं[20] श्लोकान् रचितवान् ।

---

3. having narrated, 4. playing (on the veena), 5. rows of trees, 6. a pair of herons, 7. hunter, 8. the male-bird, 9. killed, 10. the female heron, 11. dying, 12. lamented, 13. feeling pained, 14. delighted, 15. appeared, 16. from the month, 17. having said so, 18. disappeared, 19. facing east, 20. twentyfour thousand



२४. ततः संपूर्णं रामायणं लवकुशयोः अध्याप्य[21] कण्ठस्थीकारितवान्[22] ।

२५. आश्रमे नगरे च लवकुशौ एव गायन्तौ रामायणस्य प्रचारं कृतवन्तौ ।

२६. एवं वाल्मीकिः रामायणं विरचय्य लोके तस्य प्रसारं कृत्वा सर्वेषां वन्द्यः[23] अभवत् ।

## २. पदसङ्ग्रहः

मृजु - To cleanse, to wipe off, to sweep

१. मार्ष्टि, २. मृज्यते, ३. मार्जिष्यति-मार्क्ष्यति,
४. मार्जितव्यम्-मार्ष्टव्यम्, मार्जनीयम्, ५. मृष्टः-मृष्टा-मृष्टम्, ६. मृष्टवान्-वती, ७. मृजन्-ती, मार्जन्-ती, ८. मार्जित्वा-मृष्ट्वा, परिमृज्य, ९. मार्जितुम्-मार्ष्टुम् ।

या - To go

१. याति, २. यायते, ३. यास्यति,
४. यातव्यम्-यानीयम्, ५. यातः-ता-तम्, ६. यातवान्-वती, ७. यान्-ती-न्ती, ८. यात्वा-प्रयाय, ९. यातुम् ।

रुदिर् - to weep

१. रोदिति, २. रुद्यते, ३. रोदिष्यति,
४. रोदितव्यम्-रोदनीयम्, ५. रुदितः-ता-तम्, ६. रुदितवान्-वती, ७. रुदन्-ती, ८. रुदित्वा-प्ररुद्य, ९. रोदितुम् ।

---

21. having taught, 22. made them learn by heart, 23. respectable.

रुधिर् - To stop, to obstruct

१. रुणद्धि, २. रुध्यते, ३. रोत्स्यति,

४. रोद्धव्यम्-रोधनीयम्, ५. रुद्धः-द्धा-द्धम्, ६. रुद्धवान्-वती,

७. रुन्धन्-ती, ८. रुद्ध्वा-निरुध्य, ९. रोद्धुम् ।

लप् - To speak

१. लपति, २. लप्यते, ३. लपिष्यति,

४. लपितव्यम्-लपनीयम्, ५. लपितः-ता-तम्, ६. लपितवान्-वती,

७. लपन्-न्ती, ८. लपित्वा-विलप्य, ९. लपितुम् ।

## ३. प्रहेलिका - ९

यजमानेन कः स्वर्गहेतुः सम्यग्विधीयते ।
विहायाद्यन्तयोर्वर्णौ गोत्वं कुत्र स्थितं वद ॥

What is it a man performs to obtain heaven? leaving the first and the last letters of it, you get the answer to the question "where are the attributes of a cow found?." Find the answer.

**Answer** - यागविधिः - sacrificial rites,

Leaving the first and the last letters we get 'गवि' which means 'in the cow'. The attributes of a cow can be found in the cow only.

## ४. सुभाषितम् - १५

भोगे रोगभयं कुले च्युतिभयं वित्ते नृपालाद्भयम्
माने दैन्यभयं बले रिपुभयं रूपे जराया भयम् ।
शास्त्रे वादिभयं गुणे खलभयं काये कृतान्ताद्भयम्
सर्वं वस्तु भयान्वितं भुवि नृणां वैराग्यमेवाभयम् ॥





**तात्पर्यम्**

In enjoying wordly pleasures there is the fear of disease, a reputed family has the fear of disrepute, abundance of wealth causes the fear of the king-government, self respect has the fear of having to beg, power has the fear of enemies, beauty has the fear of oldage, learning has the fear of an opponent, virtue has the fear of rumours spread by wickedmen, and our body is in constant fear of death. Thus is everything in this world, there is some fear or the other for men. Only when one renounces everything, there is no fear.

**अन्वयार्थः**

भोगे - As for sensual pleasures, रोगभयम् - there is the fear of disease, कुले - for a reputed family, च्युतिभयम् - the fear of the disrepute, वित्ते - for wealth, नृपालाद् भयम् - the fear of the king, माने - for self respect, दैन्यभयम् - the fear of having to beg, बले - for strength, रिपुभयम् - the fear of an enemy, रूपे - for beauty, जरायाः भयम् - the fear of old age, शास्त्रे - for learning, वादिभयम् - the fear of an opponent, गुणे - for virtues, खलभयम् - the fear of wicked men, काये - and for this body, कृतान्तात् भयम् - the fear of death, भुवि - in this world, नृणाम् - for men, सर्वं वस्तु- everythig, भयान्वितम् - has a cause for fear, वैराग्यम् एव - Renunciation alone, अभयम् - causes no fear.

## सुभाषितम् - १६

आशा नाम नदी मनोरथजला तृष्णातरङ्गाकुला
रागग्राहवती वितर्कविहगा धैर्यद्रुमध्वंसिनी ।
मोहावर्तसुदुस्तरातिगहना प्रोत्तुङ्गचिन्तातटी
तस्याः पारगता विशुद्धमनसो नन्दन्ति योगीश्वराः ॥

**तात्पर्यम्**

Desire is a river; wishes are its water; greed is the waves there in; passion is the crocodile; and the thoughts to obtain various things are the birds flying over it. This river uproots the tree of courage. Ignorance is a whirlpool in this fathomless river which cannot be crossed. Worries are its banks. Great sages who have crossed this river called desire are blissful with a pure mind.

**अन्वयार्थः**

मनोरथजला - wishes are water, तृष्णातरङ्गाकुला - Greed is the waves, रागग्राहवती - Passion is the crocodile, वितर्कविहगा - The thoughts to obtain various things are the birds flying over it, धैर्यद्रुमध्वंसिनी - This river uproots the tree of courage, मोहा......गहना - Ignorance is a whirl pool in this fathomless river which cannot be crossed, प्रोत्तुङ्गचिन्तातटी - worries are its banks, योगीश्वराः - the great sages, विशुद्धमनसः - with a pure mind, पारङ्गताः - who cross, आशा नाम नदी - the river called desire, नन्दन्ति - are blissfull.





## ५. काव्यकथा

### अर्जुनस्य तपसः परीक्षा

अप्सरःस्त्रियः इन्द्रस्य [1]समीपेऽर्जुनस्येन्द्रियजयम्[2] [a]उरूवत्यः । इन्द्रो[3] वार्तां श्रुत्वा सन्तुष्टः । पुनरर्जुनस्य[4] परीक्षां कर्तुं स[5] इच्छति । अतः स[6] मुनिवेषं धारयति । तपोवनं गच्छति । मुनेर्दर्शनेन[7] अर्जुनः प्रभावितः । स[8] मुनेः पूजासत्कारं करोति । आसने [b]उपवेष्टुं मुनिं प्रार्थयति ।

इन्द्रः आसने उपविष्टः । सः- "त्वम् अधुना तरुणः । तथापि [9]तपश्चरसि[c] । अयं सन्तोषस्य विषयः । अयं संसारो[10] दुःखमयः । अतो[11] विवेकिनः संसारान्मोक्षमिच्छन्ति[12] । त्वं परं मोक्षं नेच्छसि[13] । शत्रुविजयमभिलषसि । शत्रुनाशेन परपीडनं भवति । परपीडनं पापस्य कारणम् । अतो[14] विजयेच्छां[d] परित्यज । मोक्षार्थं प्रयत्नं कुरु ।

---

१. समीपे + अर्जुनस्य - पूर्वरूपसन्धिः
२. अर्जुनस्य + इन्द्रियजयम् - गुणसन्धिः
३. इन्द्रः + वार्ताम् - विसर्गसन्धिः + गुणसन्धिः
४. पुनः + अर्जुनस्य - विसर्गसन्धिः (रकारः)
५. सः + इच्छति - विसर्गसन्धिः (लोपः)
६. सः + मुनिवेषम् - विसर्गसन्धिः (लोपः)
७. मुनेः + दर्शनेन - विसर्गसन्धिः (रकारः)
८. सः + मुनेः - विसर्गसन्धिः (लोपः)
९. तपः + चरसि - विसर्गसन्धिः (स) + श्चुत्वसन्धिः
१०. संसारः + दुःखमयः - विसर्गसन्धिः (उ) + गुणसन्धिः
११. अतः + विवेकिनः - विसर्गसन्धिः (उ) + गुणसन्धिः
१२. संसारात् + मोक्षम् - अनुनासिकसन्धिः
१३. न + इच्छसि - गुणसन्धिः
१४. अतः + विजयेच्छाम् - विसर्गसन्धिः (उ) + गुणसन्धिः

---

a. told, b. to be seated c. (you are) practicing penance, d. desire of victory

अयमिन्द्रकीलपर्वतो[15] गङ्गातीरेऽस्ति[16] । अतः पवित्रः । अत्र मोक्षप्राप्तिः सुलभा'' इति उपदेशं कृतवान् । अर्जुनः उक्तवान्- ''त्वयोक्तं[17] युक्तमेव । किन्त्वहं[18] न मोक्षमिच्छामि । [19]पाण्डुराज-पुत्रोऽहमर्जुनोऽस्मि[20] । दुर्योधनोऽस्माकं[21] सर्वस्वमप्यपहृतवान्[22] । अनेन ममाग्रजो[23] युधिष्ठिरो[24] दुःखतप्तः[25] । तपस्याम् आचरितुं तस्याज्ञा[26] वर्तते । इन्द्रः क्षत्रियकुलस्येष्टदेवः[27] । तम् आराधयितुमहमत्रागतः[28] ।

ममाग्रजो[29] द्यूते पराजितः । द्रौपदी मम धर्मपत्नी । दुर्योधनो[30] राजसभायां तस्याः वस्त्रापहरणं [e]कारितवान् । इदानीमपि दुर्योधनोऽस्मासु[31] द्वेषं करोति । अतः शत्रुस्सः[32] अस्माभिः [f]जेतव्यः ।

---

१५. पर्वतः + गङ्गातीरे - विसर्गसन्धिः (उ) + गुणसन्धिः
१६. गङ्गातीरे + अस्ति - पूर्वरूपसन्धिः
१७. त्वया + उक्तम् - गुणसन्धिः
१८. किन्तु + अहम् - यण्सन्धिः
१९. पुत्रः + अहम् - विसर्गसन्धिः (उ) + गुणसन्धिः + पूर्वरूपसन्धिः
२०. अर्जुनः + अस्मि - विसर्गसन्धिः (उ) + गुणसन्धिः + पूर्वरूपसन्धिः
२१. दुर्योधनः + अस्माकम् - विसर्गसन्धिः (उ) + गुणसन्धिः + पूर्वरूपसन्धिः
२२. अपि + अपहृतवान् - यण्सन्धिः
२३. मम + अग्रजः - सवर्णदीर्घसन्धिः
२४. अग्रजः + युधिष्ठिरः - विसर्गसन्धिः (उ) + गुणसन्धिः
२५. युधिष्ठिरः + दुःखतप्तः - विसर्गसन्धिः (उ) + गुणसन्धिः
२६. तस्य + आज्ञा - सवर्णदीर्घसन्धिः
२७. कुलस्य + इष्टदेवः - गुणसन्धिः
२८. अत्र + आगतः - सवर्णदीर्घसन्धिः
२९. मम + अग्रजः - सवर्णदीर्घसन्धिः
३०. दुर्योधनः + राजसभायाम् - विसर्गसन्धिः (उ) + गुणसन्धिः
३१. दुर्योधनः + अस्मासु - विसर्गसन्धिः (उ) + गुणसन्धिः + पूर्वरूपसन्धिः
३२. शत्रुः + सः - विसर्गसन्धिः (सकारः)

---

e. had it done, f. must be won over





शत्रुविजये ममाभिलाषः[33] । मोक्षप्राप्तौ मम इच्छा नास्ति । अहम् इन्द्रस्यानुग्रहं[34] सम्पादयामि । अथवा मम जीवनं पर्वतेऽस्मिन्[35] समापयामि[g]'' इति ।

इन्द्रः अर्जुनस्य वचनानि श्रुत्वा सन्तुष्टः । शिवम् उद्दिश्य तपः कर्तुं सूचयित्वा अदृश्यो जातः[36] । शिवाराधनार्थम् अर्जुनः कठिनं तप एव[37] कृतवान् । उपवासमाचरितवान् । एकेनैव[38] पादेन स्थित्वा तपः कृतवान् । फलं, जलं, सर्वं त्यक्त्वा तपः आचरितवान् । घोरतपसानेन[39] सर्वत्र तापस्सञ्जातः[40] । तापम् [h]असहमाना मुनयः[41] शिवसमीपमगच्छन् । तापात् रक्षितुं प्रार्थितवन्तः । शिवोऽभयं[42] दत्तवान् ।

मूक इति[43] कश्चन दानवः[i] । वराहरूपेण[j] स तपोविघ्नं[44] कृतवान् । अर्जुनः कुपितः । वराहं [k]हन्तुमुद्युक्तः । तदैव[45] शिवः किरातवेषेण[l] आगतवान् ।

---

३३. मम + अभिलाषः - सवर्णदीर्घसन्धिः
३४. इन्द्रस्य + अनुग्रहम् - सवर्णदीर्घसन्धिः
३५. पर्वते + अस्मिन् - पूर्वरूपसन्धिः
३६. अदृश्यः + जातः - विसर्गसन्धिः (उ) + गुणसन्धिः
३७. तपः + एव - विसर्गसन्धिः (लोपः)
३८. एकेन + एव - वृद्धिसन्धिः
३९. तपसा + अनेन - सवर्णदीर्घसन्धिः
४०. तापः + सञ्जातः - विसर्गसन्धिः (सकारः)
४१. असहमानाः + मुनयः - विसर्गसन्धिः (लोपः)
४२. शिवः + अभयम् - विसर्गसन्धिः (उ) + गुणसन्धिः + पूर्वरूपसन्धिः
४३. मूकः + इति - विसर्गसन्धिः (लोपः)
४४. सः + तपोविघ्नम् - विसर्गसन्धिः (लोपः)
४५. तदा + एव - वृद्धिसन्धिः

---

g. (will) spend, h. unable to bear, i. demon, j. in the form of boar, k. to kill, l. in the guise of a hunter,

शिवो[46] वराहस्योपरि[47] बाणं क्षिप्तवान्[m] । अर्जुनोऽपि[48] तस्मिन्नेव[49] समये बाणम् अक्षिपत् । बाणद्वयं वराहस्य शरीरे लग्नम्[n] । वराहो[50] मृतः। अर्जुनः स्वस्य बाणं नेतुं[o] वराहस्य समीपमागतवान् ॥

## ६. अन्वयरचनाक्रमः

**१९. रथः शरीरं पुरुषस्य राजन्**
**आत्मा नियन्तेन्द्रियाण्यस्य चाश्वाः ।**
**तैरप्रमत्तः कुशली सदश्वैः**
**दान्तैः सुखं याति रथीव धीरः ॥**

**पदविभागः**

रथः, शरीरम्, पुरुषस्य, राजन्, आत्मा, नियन्ता, इन्द्रियाणि, अस्य, च, अश्वाः, तैः, अप्रमत्तः, कुशली, सदश्वैः, दान्तैः, सुखम्, याति, रथी, इव, धीरः ।

**तात्पर्यम्**

Oh ! king. Human body is like chariot, sense organs are the horses and soul is the charioteer. As one rides comfortably with good horses yoked to the chariot, so does a man who has controlled his senses go on the right path.

---

४६. शिवः + वराहस्य - विसर्गसन्धिः (उ) + गुणसन्धिः
४७. वराहस्य + उपरि - गुणसन्धिः
४८. अर्जुनः + अपि - विसर्गसन्धिः (उ) + गुणसन्धिः + पूर्वरूपसन्धिः
४९. तस्मिन् + एव - (ङमुडागमसन्धिः)
५०. वराहः + मृतः - विसर्गसन्धिः (उ) + गुणसन्धिः

---

m. shot (an arrow) n. struck, o. to take



**अन्वयरचना**

राजन् । - O King !
भवति - is
कः इव भवति ? - रथः इव
किं रथः इव भवति ? - शरीरम्
कस्य शरीरम् ? - पुरुषस्य
कः इव भवति ? - नियन्ता इव
कः नियन्ता इव भवति ? - आत्मा
के इव भवन्ति ? - अश्वाः इव
कानि अश्वाः इव भवन्ति ? - इन्द्रियाणि

याति - goes
कः याति ? - धीरः
कथं याति ? - सुखम्
कैः याति ? - तैः
कीदृशैः तैः ? - दान्तैः
कः इव याति ? - रथी इव
कीदृशः रथी ? - अप्रमत्तः
पुनः कीदृशः ? - कुशली
कैः याति ? - सदश्वैः

Write the prose order and meaning of the above verse.

**२०. क्षुद्राक्षेणेव जालेन झषावपिहितावुरू ।**
**कामश्च राजन् ! क्रोधश्च तौ प्रज्ञानं विलुम्पतः ॥**

**पदविभागः**

क्षुद्राक्षेण, इव, जालेन, झषौ, अपिहितौ, उरू, कामः, च, राजन्, क्रोधः, च, तौ, प्रज्ञानम्, विलुम्पतः ।

तात्पर्यम्

Just as a net with small mesh traps even two big fish, through the sense organs, lust and anger take away the wisdom of man.

अन्वयरचना

राजन् - Oh King !

अपिहितौ इव - just as (they are) covered

कौ अपिहितौ ? - झषौ

कीदृशौ झषौ ? - उरू

केन अपिहितौ ? - जालेन

कीदृशेन जालेन ? - क्षुद्राक्षेण

विलुम्पतः - snatch away, take away

कौ विलुम्पतः ? - तौ

कौ तौ ? - कामः, क्रोधश्च

किं विलुम्पतः ? - प्रज्ञानम् - कर्मपदम् - object

Write the prose order and meaning of the above verse.

२१) सेयं बुद्धिः परीता ते पुत्राणां भरतर्षभ ।
पाण्डवानां विरोधेन न चैनानवबुध्यसे ॥

पदविभागः

सा, इयम्, बुद्धिः, [1]परीता, ते, पुत्राणाम्, भरतर्षभ, पाण्डवानाम्, विरोधेन, न, च, एनान्, [2]अवबुध्यसे ॥

1. obscured, 2. not understanding



तात्पर्यम्

Oh ! great king ! Due to the hatred of Pandavas, the wisdom of your sons is obscured. You are not understanding them.

Write the अन्वयरचना, prose order and meaning.

## ७. सन्धयः

अ) Join the words and name the form the visarga took.

Ex - नृपतिः + अयम् = नृपतिरयम् - विसर्गसन्धिः (रकारः)

सः + अपि, सुखिनः + भवन्तु, नमः + नमः, बालः + आगतः, रविः + उदेति, देवः + उवाच, कः + एषः, गुरुः + विष्णुः, कविः + वदति, नमः + तुभ्यम्, दुर्जनः + तु, बालः + नमति, शम्भुः + अवदत्, भीमः + अवदत्, गुरुः + गतः ।

आ) Split the words and name the form the visarga took.

Ex - नृपतिस्सः = नृपतिः + सः - विसर्गसन्धिः (सकारः)

शिवोऽर्चितः, सुखिनस्सन्तु, राम आगच्छत्, हरिरुवाच, मेघा आकाशे, बहिर्गमनम्, शिशुर्हसति, कस्त्वम्, इतस्ततः, जनो मृतः, शिवश्च, देवोऽस्ति, भीतस्सः, नृपतेरादेशः, रामोऽनमत् ।

## ८. सङ्ग्राह्यविषयाः

There are popular maxims in Samskrit, They are like proverbs. The use of these adds charm to the speech. Here are a few examples.

१. काकतालीयन्यायः - An unexpected coincidence is compared to काकतालीयन्यायः - A crow went and sat on a palm tree and at the same time a fruit fell from the tree. When two things occur at the same time though they have no connection, this maxim is quoted.

२. भिक्षुपादप्रसारन्यायः - A beggar had no room even to stretch his legs. A generous man gave him accomodation. Slowly the beggar occupied the whole house and threw out its inmates.





ॐ

# संस्कृत भारती

पत्रालयद्वारा संस्कृतम्

**Samskrit Through Correspondence**

Serial No. ________

## शिक्षा

नवमः पाठः

प्रश्नाः

1. Translate the following story into Samskrit.

   In a certain village there lived a rich man. He used to collect rare stone idols. Once he stayed at a friend's place. In that village there was a farmer. He had found an idol buried in his field. The rich man bought it from him.

   The farmer thought- "how foolish people are ! They waste money on stones."

   The rich man also thought- "how foolish people are ! They sell fine art for filling their stomach."

2) Write the अन्वयरचना of the following verse and explain it.

यदा यदा हि धर्मस्य ग्लानिर्भवति भारत ।
अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् ॥

NOTE : Please write the answers in a separate sheet of paper and send it to us.

को हि भारः समर्थानां किं दूरं व्यवसायिनाम् ।
को विदेशः सुविद्यानां कः परः प्रियवादिनाम् ॥

For capable persons what is impossible ? For industrious persons what is distance ? For literates which is an alien land ? For soft speaking persons who is a stranger ?

एहि ब्रूहि समाधेहि समाश्वसिहि मा स्म भैः ।
आपन्नमिति यो ब्रूयात् तस्य लोको वशंवदः ॥

The world is his, who says to a man in difficulty - come, tell, don't worry, be confident and don't fear.

यथा चित्तं तथा वाचो यथा वाचस्तथा क्रियाः ।
चित्ते वाचि क्रियायां च महतामेकरूपता ॥

Just as they think, they speak . Just as they speak, they act. The great persons have unity in thought, words and action.

**सूचना -**
एतस्मिन् पुटे स्थिताः श्लोकाः परीक्षार्थं न ।

शि(इं) - IX - नवें - ९७, १,०००

